निर्व्याजवत्सलहृदामुर्व्यां द्विगुणापि लाल्यनामेति ॥
कृतिवर्याणां कृतिरियमविचालोक्तिर्हि लाल्यते सर्वैः ॥१०॥
पञ्चवटीनिकटे भुवि चञ्चलनयना विहारजनिभूमिः ॥
विस्फूरमिवा विलसति चञ्चल्लक्ष्मीः पुरी निरीतिरेवा ॥११॥

यस्यां सदा पुरि महच्छविदेहलीला-
शाल्या रघूत्तमसती तुलनां नितान्तम् ॥
गेहावलिश्च दधते ललनाश्च साध्व्यो
वैतानभूपितनया च मनोहराभाः ॥ १२ ॥

यत्र मनोजेवसत्त्वं दधते राजन्यसमुदयाः पुन्याम् ॥
आजानेया रुचिरा ललना अपि यौवनारूढाः ॥ १३ ॥

यत्र स्त्रीणां मध्यमं मध्यमत्वं
त्यक्तुं नम्रायः शिरःस्वेष्टलाभम् ॥
अप्राप्यालं खेदतः कार्श्यमाप
प्रायो न स्याद्गौरवं मध्यमानाम् ॥ १४ ॥

यत्रानारतथाग्रभूमिषु नरैर्निद्रालसैर्यामिकैः
रात्र्यां मार्गवशाद्गवाक्षविवरे गच्छन्कदाचिद्विधुः ॥
यस्त्वामांशयितैरिदं प्रतिहतो दण्डेन नूनं न चे-
त्कस्मान्मण्डलमध्यमुग्ध्यानितरां धत्ते किणं श्यामलम् ॥१५॥

---

१ नित्यं गतिमतो नोपद्रवेण्वा । २ मनोजो मदनस्तस्य जवत्वं जवतिः : अथवाश्वे मनोजवमस्त्वं मनोगतिवेगवत्त्वं । ३ तुरङ्गमाः उत्तमजात्युत्पन्नाश्च अश्वाः । ४ मध्यमिदानाम् ।

यत्कान्ताकान्तिचौर्योदितकुतुकतया जालरन्ध्रप्रविष्टो
रात्रौ सौधे प्रबुद्धैः सपदि निगलितासौविदल्लैः सुधांशुः ॥
आदातुं या अशक्तो निजरिपुललनावक्त्रवीक्षात्तभीति-
स्तत्रात्याक्षीन्नु मुक्ता इति हि दधति ता नाम तारास्तदेव ॥१६॥

तामिह रघुनाथनृपः पालयति गुणैर्गरीयसीं नगरीम् ॥
तेन पुरी सायोध्याभिख्यां न वहेत कथमिह धरित्र्याम्॥१७॥
पञ्चवटीरम्यत्वं स्मृत्वास्मृत्वाधुना स तत्रैव ॥
नगरीं निर्माय निजामास्ते रघुनाथ इतीयमभिदधते ॥ १८॥

तत्ताद्दक्षमहादशाननकथादिक्काराविश्राणना
प्रागल्भ्योल्लसिताखिलाग्रसुमनोहर्षा लसद्धर्मभाक् ॥
उल्लासं दधती सदा मनसि वैदेह्युक्तिकाकर्णने
व्यक्तिः सा रघुनाथनाममहिता न स्यात्कथं वा भुवि १९
यस्य च सहधर्मचरी स्थिरात्मजातात्यनर्घगुणभूमा ॥
जनकान्वयमोदकरी जयतितरां जानकीदेवी ॥ २० ॥

चन्द्रशेखरधर्माभिवर्धनं पतिमीयुषी ॥
जानकी रघुनाथं स्यान्नसानन्तात्मजा कथम् ॥ २१ ॥
ऊर्मिलानन्दलहरीसंदायिगुणभूषिता ॥
श्रुतिकीर्त्यग्रगा लोके यैषा विजयतेतराम् ॥ २२ ॥

---

१ भूमिः 'भालदार' इत्यादिपार्तिः । २ रघुनाथपक्षे वैदेहीतिच्छेदः । ३ जनकः पिता जनकरामा च । ४ अनन्ता जानकीपितृनाम पक्षे अनन्ता पृथ्वी । ५ ऊर्मिलोर्मिरागेन । लक्ष्मणपत्नी च ।६ श्रुताः कीर्तयो यासां तासामग्रगा पुरे धार्मिकेया । श्रुतकीर्तिः शत्रुघ्नपत्नी ।

सिद्धार्थो विजयान्वितश्च सचिवो दृष्ट्यन्वितोयन्मुदं
पुष्णाति प्रचुरामशोककलितः सन्मन्त्रपालः सदा ॥
बुद्धिः श्लाघ्यसुमन्त्रदत्तहृदयो नित्यं जयन्तं पुरः
कुर्वन् भूतलमर्थसाधकहितो यः पालयन्नेधते ॥२३ ॥

खरदूषण[1]पारुष्यासहनं च श्लाघ्यता जनस्थाने[2] ॥
अपि च जलध्युद्बन्धनचातुर्यं नाद्भुतं विभोरस्य ॥ २४ ॥

सक्ता विष्णुपदे[3] यदीयजननी संसिद्धितः पावनी-
यां प्रीतिं दधतीं च शंतनुमतां प्राहुर्घना सज्जनाः ॥
या रक्तां च सरस्वतीं परिचिनोत्यादित्यजातादरा
गङ्गाम्बा स हि भीष्म एव समरे न स्यात्कथं भूपतिः२५

यद्यपि गङ्गातनुजस्तदपि विशेषोऽस्ति यदिह राज्यसुखम् ॥
सह धर्मिण्या साकं स महीपालो भुनक्तीति ॥ २६ ॥

संप्राप्तचन्द्रभागो यशसा यः पुण्डरीकवरद[4] इति ॥
ख्यातः स विठ्ठलमहीनेता यस्याऽभवत्तातः ॥२७ ॥

बहुशस्तं भजतामिह कल्पुतमतिश्रियं ददन्ति जनाः ॥
यस्य पितामहमवनौ नरसिंहेन्द्र इतिसार्थनामानम् ॥ २८ ॥

मत्स्याद्यवतारेषु श्रीरघुनाथानुजन्मता विदिता ॥
कृष्णस्येति स्फुटयति नूनं यस्यानुजश्च कृष्णविभुः ॥ २९ ॥

---

१ खराणि तीक्ष्णानि दूषणानि तेषां पारुष्यं कठोरत्वम् । पक्षे खरदूषणौ रक्षसौ । २ जनस्थाने लोकेषु । पक्षे जनस्थानं खरदूषणनिवासस्थानविशेषः । ३ विष्णुपदे आकाशे विष्णोः पदे च । ४ कमलानन्ददः । पक्षे विठ्ठलभक्तविशेषः ।

श्रीमान्पोषितधर्मजातविजयो नित्यानिरुद्धाधिका(क)-
प्रद्युम्नप्रचुरोधिकंसरमहद्देवः सुभद्रान्वितः ॥
विख्यातो वसुदेवनन्दनतया सत्कामपालादरः
कृष्णाख्यां न कथं वहेत नितरामक्रूरसेव्यो विभुः ३०॥

नवनीतहृन्महापलभावशर्कटकादिदाननिपुणपदः ॥
माधवविभुरिति सार्थाभिख्यो यस्यानुजोस्त्यन्यः ॥ ३१ ॥

वाचस्पतिरिव वक्ता सभासु यश्चोत्तरोत्तरायुक्तीः ॥
चित्रमिदं मौनान्वयसमाश्रितः सर्वदैव राजेति ॥ ३२ ।

अपि चास्मिन्विस्मापनीयचरितनिरतविविधनरपतिकुलतिलकमुकुटलसदरुणमणिपटलगलदमलघृणिमसृणितमुखादिनविगमसमयभवदरुणरुचिपिहितलसद्दुडुचयसदृशनखमणिरमणीयचरणकुशेशयानुशयबान्धव इव वसुवितरणानन्दितद्विजराजे द्विजराज इव रत्नाकरवृद्धिदानचतुरे चतुरानन इव सदागमानुकूलवैभवे भव इव राजकलाभिरामे राम इव दानवारिसम्पत्करे करेणुकान्त इव कर्णाह्वनजनितस्पर्शनवितानें वितानपावक इव सदाज्यागमसम्पन्नानन्दे नन्दनन्दन इव दिव्यसौन्दर्यगोप्यन्तःकर-

---

१ धर्मजातविजयः धर्मः जयश्च । पक्षे धर्मराजोऽर्जुनश्च । २ अनिरुद्धः स्वतन्त्रः । ३ प्रद्युम्नप्रचुरः अधिककान्तिमान् पक्षे प्रद्युम्नः कृष्णपुत्रः । ४ अधिकंसमिति कृष्णान्यपक्षे अधिकंस-रसहृत् इति कृष्णपक्षे । ५ सुभद्रकन्यान्वितः पक्षे सुभद्रा श्रीकृष्णभगिनी । ६ अक्रूरसेव्यो अक्रूरजनैरसंव्यः । पक्षे अक्रूरः श्रीनन्दः । ७ नवनीतहृन्मृदुमनाः पक्षे नवनीतहृत् हैयंगवीनचोरः । ८ महोपलवन् ग्रहाः शकटादयो गुणलंघी दानमवनम्दनं पक्षे शकटादिदानम् । ९ मौन मूकत्व च मौनान्वयः मुनिवंशः ब्राह्मणकुलमित्यर्थः ।

णमोहनइतिप्रथाजनके जनक इव सुधन्वारातिक्षपणदक्षे दक्ष इव महाहवशरणागतार्याधिक्षेपणोत्सुकमानसे मानससरोवर इव राजहंसाश्रितघनसारसवनाश्रितानिमिषकुले रणधूर्वहगर्वोत्पतद्दुर्वीश्वरखर्वेतरगर्वानलनिर्वापणवार्वाहसुपर्वाधिपगुर्वायुधसर्वोन्नतिसर्वंकषाखण्डचण्डिममण्डलाग्रखण्डितरिपुमण्डले प्रत्युप्तप्रत्नरत्नचित्रभित्तिकनिकाय्यनिर्यत्ननिर्यत्प्रपारिरब्धशुद्धशातकुम्भस्तम्भसम्भृतजम्भारिमणितुलासम्भाराभ्यर्णसमुत्कीर्णमुकुरनिकुरम्बबिम्बितजाम्बूनदप्रतिमप्रतिमानुपमसुषमावलोकनसमाकलितरमाकृताकृतिनिसंदोहसंदेहकन्दलितहृदयारविन्दपुरन्दरसुन्दरीवृन्दसमत्तयामुक्तमन्दारदामसंदेहदाननिदानवितानावलम्बमानस्वच्छमुक्तासरगुच्छविसरपरिशोभितविविधकौतुकस्थानकलितास्थमनीषिकदम्बसम्भृतमोदावहवादाहवकोलाहललीलाकर्णनसमुदीर्णकर्णहर्षे प्रतिदिनसमुदग्रसौधाग्रसभापर्यन्तानिरन्तराकलितचटुलनटनवारसारङ्गीद्वगङ्गीकृतसङ्गीतभङ्गीविवशान्तरङ्गीकृतस्वरङ्गणतराङ्गिणीरङ्गदुत्तुङ्गतरङ्गमालिकादोलिकाकेलिकासक्तमरालिकायालिकासविलासग्रहणकौतुकसञ्चरच्छम्बरायुधपुरनितम्बिनीकदम्बपद्माम्बुरुहावलम्बिमञ्जुमञ्जुमञ्जीरासिञ्जितस्वसजातिरासितभ्रमपरिभ्रमद्भ्रमरपक्षविक्षेपविकीर्णसौवर्णार्णोजराजिविशङ्काकलननिपुणनिजदर्शनार्थनिबिडितानन्तसामन्तक्ष्माकान्तसंततिदुर्वारसंमर्दपरस्परघर्षणोत्कर्षविच्युतकाश्मीराङ्गरागपरागपरावर्तितधूलीसमुत्से-

---

१ इन्द्रनामकदेशराजः । पक्षे स्पष्टम् । २ निकाय्या निलयाः ।

पणकेलीभरमदाकुलमदावलपद्मावहननिष्पिष्टरङ्गवल्लीमतल्लीमौक्तिकततिनतोहाराम्रजाम्रचत्वरसत्वरविमृत्वरभटपटलप्रतिक्षणावेद्यमानविविधविषयवृत्तान्ते मीनमुनिगोत्रकलशाम्बुधिनिशाकान्ते दान्ते रघुनाथक्षमाकान्ते परिपालयति भाज्यं राज्यं चोरशब्दः कविप्रशंसायामेव धूर्त[1]विचारो महीरूहेष्वेव चपला[2]सक्तिर्जलधरेष्वेव पद्मिनीदूषणं पद्मिकुलेष्वेव पार्थिव[3]प्रतारणविचारो वत्सरेष्वेव निरलंकृतित्वं कुकविकृतिष्वेव वक्रता कदाचन ग्रहेष्वेव हृद्रोगप्राचुर्यं शनैश्चरस्यैवेति रचितव्यवस्थे निखिलजने वितीर्णराजदीप्तिसौभाग्यं समुल्लसतितरणिमण्डलमिव धरणिमण्डलम् ।

विरचितरक्षोबाधाविधूननो लक्ष्मणाग्रणी राजा ॥
रघुनाथः पञ्चवटीं जानक्या साकमतनुत समोदाम् ॥ २३ ॥

श्रीनव्यदुर्गनिलयः कृष्णः कविसार्वभौमविरुदा[4]ढ्यः ॥
प्रथमविलासं विदधे नवेन रघुनाथविजयेऽस्मिन् ॥ २४ ॥

इतिकविकृष्णविरचितायां रघुनाथविजयचम्प्वाः प्रथमो विलासः ॥ १ ॥

---:o:---

## द्वितीयो विलासः ।

एकदा तस्य विविधतीर्थसार्थयात्रासक्तस्य रक्ताक्षिवत्सरविजयदशम्यां विजयदशम्याकलनकुतुकसरभसपरिभ्रमदभ्रकरितु-

१ धूर्तो धत्तूरसंज्ञको वृक्षः पक्षे धूर्तः शठः । २ चपला स्त्री विद्युच्च । ३ पार्थिवो राजा वा पृथ्वीमूर्तिः पार्थिवनामा संवत्सरश्च । ४ विरुदं पदम् ।

रङ्गरथनिकरायां रघुनाथमहाराजस्य दुर्लङ्घ्याज्ञापथजाङ्घिकतया मुच्यमानतुरङ्गाणां बध्यमानपर्ल्याणानां[1] न्यस्यमानखलीनानां भूष्यमाणमहावल्लानां उद्ध्रियमाणनलकानां प्रविश्यमानकञ्चुकानां प्रतिमुच्यमानसारसनानामुच्यमानग्रैवेयकाणामुत्क्षिप्यमाणकौक्षेयकाणां[2] गृह्यमाणासिधेनुकानां[3] नह्यमानशिरस्त्राणानामारुह्यमाणरथानामुह्यमानखेटकानां[4] नर्त्यमानघोटकानां सज्जीक्रियमाणोष्ट्राणां नुद्यमानरथानां[5] उत्कम्प्यमानकुन्तानामुद्धूयमानोत्कम्पवसनानां क्रियमाणसिंहनादानां कार्यमाणकरिगर्जितानां चाल्यमानकशानां वल्यमानाजानेयानां निरुद्ध्यमानवनायुजानामास्फोट्यमानरट्टानामवरुध्यमानजयदुन्दुभीनामाच्छोट्यमानहस्तानामञ्च्यमानकाम्बोजानामावेष्ट्यमानशीर्षण्यपटानां विचेष्ट्यमानकलभानां उन्नस्यमानक्रमेलकानां एहि याहि देहि धेहि विधेहि निधेहि ब्रूहि पाहि जानीहि हरस्व विहरस्व परिहरस्व प्रहरस्व आहरस्व मोदस्व दयस्व कुत्र यासि तिष्ठ कदा महाराजो बहिर्निर्गमिष्यति किं करोति कुत्रास्ते निर्गत एवेदानीं नास्त्यवकाश इति जल्पतां प्रतीक्षमाणानां तद्दर्शनं भिक्षितप्रतिभटकराटिघटानामुज्जृम्भितप्रतापच्छटानां युद्धरङ्गोद्भटानां बहुधैर्यस्फुटानां दुर्वारसंमर्दोत्कटानां यशोविमलितदिक्तटानां प्रदारुणान्तकपुटानामत्युद्भटानां भटानां पटलैश्चटुलैर्निबिडमभूद्दर्शनार्थसंचरत्काञ्चनाङ्गीचञ्चलापाङ्गचन्दनमालिकाञ्चितविस्फूरपुरमाञ्चिताखिलश्रीभरम् ।

---

१ पल्याणं ' पलाण, इति प्रसिद्धम् । २ कौक्षेयकोऽसिः । ३ असिधेनुका ' जंबीया ' इति प्रसिद्धा । ४ खेटकं चर्म ' ढाल ' इति प्रसिद्धम् । ५ ' युज्यमान ' इति वा पाठः । ६ वनायुजो देशविशेषोत्पन्नो घोटकः ।

रत्नाक्षिवत्सरेऽस्मिन्कस्माद्दुन्दुभिरुपागत इतीव ॥
रोषभरान्मौहूर्तिकमतेन जघ्नुर्भटा जयार्थं तम् ॥ १ ॥
अतिनिर्दयजनमर्दितघनमर्दलनर्दनार्दनोर्दण्डतरम्(?) ॥
मदद्दुर्दिनबहुदुर्दमरिपुकर्दमतर्दनार्ककुर्दनकलितम् ॥२ ॥
बहुसुन्दरघनदुन्दुभिनिनदं धुरि मन्दराद्रिकन्दरदलनम् ॥
पटुपटहपटलचटुरवघटितं शुश्राव भूपतिश्रेष्ठः ॥ ३ ॥

तावदेव भावनपरिभावव्यापारलोलरूपानन्दितनिखिलजनवृन्दो मन्दंमन्दं वसुन्धराधुरंधरः समुत्थाय सिंहसंहननसिंहासनाद्दीयमानहस्तावलम्बोल्लम्बमानबाहुना करतलकलितसुकुमारवसनेन परिजनेन सविनयं निवेद्यमानमार्गः पदेपदे रक्षिवर्गैरक्षिमार्गप्रविष्टमात्रान्मर्त्यानियमयमेवेति जानानोऽपि मानाधिकगाम्भीर्यादप्रकाशितकुतूहलो यथा मर्यादमार्यांस्तांस्तान् सम्भावयमानः सगौरवमन्मद्वंशलक्ष्मभूतस्य रघुनाथस्य बिभर्ति नामधेयमेष राजेत्यादरान्मूर्धानमुपाघ्रातुमुपर्युपरि मकुटं लम्बमानेन सौकुमार्यसौन्दर्यविलोकनविवासितहृदयतया लिङ्गितुमदःप्रसारितैकतरभुजदण्डेन मार्तण्डेनेव बुधानुगतेन सौवर्णदण्डाग्राधिष्ठितेन मरकतकलशकल्पितेन कनकगुणरचितातपत्रेण विभूषितमकुटीतटस्तत्तादृशसौन्दर्यविमानिततया जितोऽस्मीत्युपहारकृते कन्दर्पेणार्पितैस्तुरीयबाणनरमल्लिकामतल्लिकापुञ्जैरिव चामरैर्वीज्यमानो निर्गत्यास्थानादग्रतः सन्नोल्लतान् मुहुर्मुहुः करपुष्कराञ्जलीरञ्जानिष्ठीव्यमानलवलीकरानिकरतया पदेपदे निषादिककोलिनानिरङ्कुशाङ्कुशवदनवेदनासहनतया निजजन्मभुवमपि परित्यज्य कुत्रापि यातुं

नासिकाविवरान्निर्गतान्मौक्तिपुञ्जानिवात्मजवत्सलतया राजसमीपं यातेत्युक्तिरतो गगवरान्विलोकयन्विन्यस्य पञ्चपानि पदानि जयाशीर्वचनपूर्वकं द्विजव्रतप्रदत्तान् करकञ्जमञ्जुलकिञ्जल्कपुञ्जानिव अक्षतजयानक्षतचयान् संगृह्णानो विनयविनमितोत्तमाङ्गतया वदनचन्द्रातिमात्रसन्निधानात्तत्क्षणं सङ्कुचितेन भक्त्युन्नमितेनाञ्जलिपद्मेन यथोचितं मानयन् तांस्तान्समीक्षमाणोऽप्यक्षानखिलान् सैनिकांश्च निजविरोधिगजराजसाध्वसादिव प्राप्तसङ्कोचानां तुङ्गरङ्गतुरङ्गतरङ्गसङ्गतवाहिनीमुन्मेलदम्बुजकुड्मलानामिव तदुदञ्चितानामञ्जलिपुञ्जानां निजवदनचन्द्रकटाक्षचन्द्रिकाप्रसारणेन चिरस्याप्यप्रदत्तविकासः सादरं परिजनदत्तकरावलम्ब आरुरोह निजजवविनिर्जितविहङ्गमं तुरङ्गमम् ॥ ३ ॥

तावद्ब्रह्माण्डभाण्डस्फुटनपटुतरोद्दण्डदण्डप्रचण्डा-
घातस्फीताविगीतास्फुटपटहसटाभेरिकाभीरनादैः ॥
हेषाघोषात्तहस्तोद्भटकरटिघटागर्जिताद्यार्जिताचि-
स्थैर्यैश्चर्यैर्भृशमखिलदिशां दन्तुराण्यन्तराणि ॥ ४ ॥

द्वेधा मध्यमवर्णं तुरङ्गमारुह्य चलति निखिलबले ॥
रघुनाथमहीपालो रञ्जितलोकः पुरान्निरगात् ॥ ५ ॥

कटुतरचण्डभानुकरतापभरं सह तेन
हि मम पालकोऽयमिति सादरया धरया ॥
विपुलमुदाञ्चितं दिवि वितानमिवातिघनं
व्रज उदजृम्भताश्वखुरदारुणदारणजम् ॥ ६ ॥

माद्यद्वन्धुरगन्धसिन्धुरचलत्पादातपादाहति-
क्षुण्णक्षोणितलोच्चलद्बहुरजःप्रोद्भिन्नदिग्भित्तिका ॥
हेषाघोषविघूर्णिताहितचमूयोधाधिनाथोद्धता
नृत्यत्तुङ्गतुरङ्गपुङ्गवघनारङ्गच्छुभाङ्गी चमूः ॥ ७ ॥
स्तुत्वा सर्वसहेति प्रतिपदमखिलास्ताडयन्ते पदैर्मां
यस्मा लोके क्षमावांस्तमखिलमनुजाः क्लेशयन्ति ह्यजस्रम् ॥
स्तुत्येषां किं ममेति क्षितिरतिकुपिता सर्वलोकोपरिष्टा-
दारूढे वा विभासे बलचलितमहाधूलिकापालिकाग्रे ॥८॥
वहुचत्वराभिरामासमुद्गीश्चतमत्तवारणोन्नासाः ॥
रथ्या विविशुः पुरतो विलसितमुखलीनगन्धर्वाः ॥ ९ ॥
पटुतरकोणताण्डवविजृम्भितकुम्भिवर-
स्फितघनदुन्दुभिप्रचुरभांक्रीतिसंश्रवणात् ॥
मम शिशवः शिशुर्मम कुत्र गता इति
जननीजनैर्मम्रृगिरे पुरि माणवकाः ॥ १० ॥
मत्ते देहि ममावकाशमबले तिष्ठात्र मुग्धे मना-
गुन्नम्याननमत्र पश्य ललिते त्वं तिष्ठ दृष्टं मया ॥
मन्दे तत्र गवाक्ष पश्यसि किमु स्निग्धे तथापि स्थिते-
रत्रास्तेन्तरमम्ब किञ्चिदपि मे द्रष्टुं न दत्से न्तरम् ११
हित्वा मर्त्यसमृद्धि यन्पुरमविशज्जानकीलक्ष्मणाभ्या-
मेवं मागत्य मत्वा नगरयुवतिपर्यां सर्ववन्द्यां च धन्याम् ॥

---

१ दुन्दुभिरम्भादुकारमिनर ।

द्रष्टुं संजातहर्षश्चलति वलयुतः प्राज्यसाम्राज्यपूज्यः
जानक्या साकमालोकयसपरिजनो लक्ष्मणान्वीयमानः १२
मा स्माक्षीरिति जल्पसि प्रतिपदं कस्मादिहास्यागता
सन्धे त्वं नियमस्थिता यदि पुनः कस्मादिदृक्षा तव ॥
इत्थं सौधतलेषु पौरललना भूपालदत्तेक्षणा
लज्जाहासविलासमञ्जुलतमा अद्राक्षुरारामभूम् ॥१३॥
सौधाग्रस्थितललना बाहुलताग्रान्नृपालशिरसि तदा ॥
दरदलितकुड्मला इव लाजा जगलुर्मुहुर्मुहुर्विमलाः ॥१४॥
एतत्सदृशं ललनाकुचयुगलभूषितं कनकचोलैः ॥
इति कुतुकात्कनकपटीभूषितकुम्भा ववल्गुरिव डिम्भाः१५
वयमिव सैंधव एष क्षमामहे नेन्दुमेवमूर्ध्वस्थम् ॥
इति तं पातयितुं ध्रुवमुदग्रचरणा हयास्तदारिङ्खन् ॥१६॥

निवर्त्य चानुव्रजतः प्रजाव्रजाननुजादीन् महाराजान् द्विजांश्च भूरितेजा राजा विमृत्वरत्वरो यावद्दिव्यक्षेत्रयात्राकुतूहलमुन्मरतकयति स्वयं तावद्वल्गयद्भिस्तुरङ्गमान् भेङ्क्रयद्भिः क्रमेलकान्नादयद्भिर्वारणान्वादयद्भिर्वादित्राणि जृम्भयद्भिर्दुन्दुभिभाङ्कारानाज्ञापयद्भिः सरभसगमनं उत्कम्पितकेतनैश्चलितचामरमुन्नर्तितमालकातपत्रमुन्मस्तकघण्टारवमुन्नीतधूलिपालिकमुद्दामदेहपाघोषमुद्भूतालस्यमुदश्चितान्दोलिकावहनधुरीणजनविविधमोदमनन्यमानसैः सैन्यैरतिक्रान्तबहुदूरवर्त्मा धर्मात्माप्रतस्तत्रतत्र सलिलक्रीडासक्तयौवनोद्धतमुग्धस्निग्धवधूकुचकनककलशनर्चितमसृणवसृणपङ्क-

१ लक्ष्मणा राजचिह्नयुक्तः। २ हस्तिबालकाः। ३ केतुवस्त्रम्। ४ हर्षः।

क्षालनपाटलैकदेशतया तदञ्जनक्षालनाविमेचकिमैकदेशतया च वृद्धगङ्गेयमावयोः पूज्या सखीति प्रेमातिशयेन समागताभ्यां सरस्वतीकलिन्दनन्दिनीभ्यामिव कृतपरिरम्भा क्वचिन्मृदुलतरपुलिनखेलदतिसुकुमारलक्ष्मणाविक्षणकलकलरवव्याचालितया निजतटविरचितविहारः पुरा पुनरिदानीं स एव जानक्या साकमाकलितलोकानन्दो रघुनाथभूमीन्द्रः समागत इति सुखागमनवार्तामिव पृच्छन्ती निरीक्षितचरीं गोदावरीमतीत्य सत्यसंधो विरचितनिखिलजनसुखासिकां नासिकां नाम नगरीं प्राविशीत ॥३॥

प्रोद्यत्कोपेन यत्राग्रजमनुसरता लक्ष्मणेन प्रलूना
नासा रक्षोभगिन्या रघुकुलपतिना यत्र घोराग्रगेण ॥
ताद्दक्क्रूरत्वसुभितसुरपतिप्रष्टलोकाधिपालाः
पौलस्त्याज्ञाधुरीणाः सपदि विदलिता भीषणा दूषणाद्याः १७॥

मदनमदहारिरूपो भूपो जात्वप्यनाघ्रगन्धोपि ॥
आत्मानं पश्यन्तीमानन्दयदेष नासिकां चित्रम् ॥१८॥

गोकन्याक्षितिगन्धसिन्धुरमहावाहाभिगेहादिमासंख्यातप्रतिपादनाश्चितबुधेप्येष क्षमावल्लभः ॥
गोदातीर्थेनिपेवणादनुनुतात्मानं धुताघं बत
प्रायोऽहंकृतिदूरगाः क्षितितले सन्तो महान्तो जनाः १९

श्रीमन्नवदुर्गस्थः कृष्णकविः सार्वभौमबिरुदाढ्यः ॥
द्वैतीयिकं विलासं विदधे रघुनाथविजयेऽस्मिन् ॥ २० ॥

इति कविकृष्णविरचितायां रघुनाथविजयाख्यचम्प्वां
द्वितीयो विलासः ॥ २ ॥

१ सुखासिकं सुखस्थानम् ।

## तृतीयो विलासः ।

—:०:—

तदनु यथाक्रमं कृतनिमज्जनो निखिलमङ्गलतुङ्गाधारे गङ्गाद्वारे आरचिताञ्जलिः समुन्नतशिलातलाघट्टनजनिताकुलावर्ते कुशावर्ते अङ्गीकृताभिषेकः मकरन्दतुन्दिलहल्लके बिल्वके निर्वर्तितानुष्ठानः परिवृतनिखिलकलिकल्मषाभीलगर्विते नीलपर्वते उरीकृतस्नानः पावितजनकुले कनखले च तीर्थे परार्थे भूतलावतीर्णत्र्यम्बकपदाम्बुजसेवाभिलाषसमागतपुरन्दरपुरसुन्दरीवृन्दरीतिहरणनिपुणरमणीजनशरणीकृतमणिविमानघमानलसमानकूलरत्नसौधयूथनिविडितस्वर्द्धुनीनिपातलम्बमानशस्तकस्तूरिकादिनिस्तुलवस्तुसारिनिखिलपरिमलकृतानिमिषमधुपंधयधुरन्धरवृन्दनीरन्ध्रतया निलाधिनाथं त्र्यम्बकमनुकर्तुं नागाजिनेनेव रचितावगुण्ठनस्य त्र्यम्बकक्षेत्रस्य निरुपमालङ्कारवज्रमणिं निजनेत्रसाधर्म्यावलम्बनेच्छयेव त्रिधावतीर्णं त्र्यम्बकं नाम भगवन्तमुमाकान्तं संसेव्य सानन्दबाष्प इत्थमस्तौषीत् ॥ १ ॥

भगवंस्त्र्यम्बक इति किल निगमान्तैर्गीयसे भवान् सततम् ॥
तदपि समदृष्टिरसि यच्चित्रमिदं किं ब्रवीमि तव चरितम् ॥
त्वं त्र्यम्बकोऽपि चित्रं पञ्चाम्बिकमथनकृन्मुखोऽसि विभो ॥
नहि साधनसम्पत्तिः फलाय तद्वद्यथा तेजः ॥ २ ॥
त्वं नीलकण्ठ एव श्रीमन् सन्मानसे कथं नित्यम् ॥

---

१ कृतस्नानः । २ अम्भसांभ्रमः । ३ संध्याविकासितताम्बरमरन्दम् । ४ आभीलं भयंकरं । ५ शाखानिकुञ्जान्तः । ६ पञ्चाम्बको मदनः ।

विहरसि विचित्रमेतच्चरितं तव कुमुदबन्धुमौलिमणे ॥३॥

ये वृषवन्तो धरणौ तेषां सुलभोसि देव पुरवैरिन् ॥
वृषमुत्सृज्य पदं वा न चलसि वृषवाह यस्मात्त्वम् ॥ ४ ॥

दोषाकरमपि शिरसा दधदश्रान्तं भवन्तमिह भजताम् ॥
दोषाणि धुनोपि विभो वृत्तिस्ते नयनवह्निपया ॥ ५ ॥

अत्रिनयनप्रियोपि त्रिनयनमुकुटेन किमिति ते श्लाघ्यः ॥
इन्दुर्हिमसम्बन्धादथ वा हिमवत्सुताकान्तः ॥ ६ ॥

आचरसि हि भिक्षाटनमथापि सम्पत्तिमादधासि नृणाम् ॥
परमेश्वरोसि कस्माद्दिगम्बरोसीति शिक्षकः कस्ते ॥७॥

पञ्चाननः षडाननमहितोसि विचित्रमन्यदेतच्च ॥
त्र्यम्बक सहस्रनयनाश्रितोसि नित्यं यदेप त्वम् ॥ ८ ॥

इत्यभिष्टुत्य हृष्टमानसः स महीपालमणिश्चिरतरं महानट-जटाजूटकोटिकोटरतटनिवासजनितविरहक्लेशशशाङ्कपरिरम्भार-म्भसम्भ्रमवितरणार्थमवतीर्णतारावलीभ्रान्तिदन्तुरीकरणनिपुणस्मे-रानवमुक्ताहारावलीः ज्योतिःस्वरूपोयं त्र्यम्बकेश्वर इति तत्रै-वयमुपगन्तुमागता विद्युल्लता इव दिव्यकनकपदीश्च पटीयस्या भक्त्या समर्च्य तस्मै चिरतरं किमपि किमपि मनसि महातपो-त्सवादिपरिष्कारनिष्कर्षं निष्कासितसंशयं विचिन्त्य यावत्त-द्दिव्यालयान्निर्गच्छति तावदताडयन्त दुन्दुभीनमर्दयन्त मर्दलानु-दैरयन्त तूर्याण्युदघोषयन्त जयजयशब्दानवर्तयन्त वारवधूटि-

---

१ चन्द्रम् । २ अत्रेः नयने तयोः प्रियः । ३ इन्द्रपूजितः ।

का व्यसयन्त धवलान्तपत्राण्याकम्पयन्त चामराण्यचालयन्त कुन्तानवल्गयन्त तुरङ्गानद्रावयन्त शताङ्गानगर्जयन्त मातङ्गानचारयन्त पदातीननादयन्त काहलानवादयन्त पटहाद्यनाद्यानतर्जयन्त क्रियामन्दान् कचिद्रूप्यन्तो धुप्यन्तो हसन्तः परापतन्तो निश्वसन्तो ब्रुवन्तस्तूर्णं यातेति धून्वन्तः शिरांसि तन्वन्तोञ्जलीनमुञ्चत आनन्दबाष्पान् सिञ्चन्तश्चन्दनवारिभिर्जनान् सैनिकांश्च स्वकृत्यसज्जीभूता एवं यावद्भवन्ति तावद्यथापुरं प्रविश्य नैजोपकार्यामार्याणां यथामर्यादमपर्याप्तं वितीर्य धनं महीपालवर्यो निर्गत्य तस्मान्नगरादतिक्रम्य रम्यान्प्रदेशानगणितशृङ्गसङ्गतेऽपि सप्तशृङ्गनरधामे भूमिधरे पुराणैरिव पुरातनवाणीमष्टादशभिराश्लिष्टां भुजैरजय्यैः संसेव्य भव्यां देवीं मदाय ममदाडुदारोऽवदातकीर्तिर्यथेष्टं तुष्टचित्तो वित्तं तत्तदनुगुणे महाजनेभ्यो विहाय तदपि स्थलमैलनदीपरिसरभुवि ज्योतिर्मयमभिवन्द्यारिजनभीष्मं घुष्मेश्वरं पुरस्कृत्यापि तं पश्चात्कृत्य गोदाः प्रायेण प्रवरासङ्गदत्तचित्ता भवन्तीति सूचयितुमिव जगतां प्रवराख्यनदीसङ्गमनुभवन्त्याः सकलजगच्छ्रीदायाः गोदायास्तटभुवमाधिवसन्तं गोदाश्रिताः प्रवराश्रिता वा पुंसिद्धाः भवन्तीति निदर्शयितुमिव सिद्धेश्वरामिख्यां प्रख्यापयन्तं हैमवतीकान्तं प्रणम्य सम्यग्विसृज्य तं च प्रदेशं निखिलजगत्सम्पन्निवासं निवासं नाम प्रविश्य पवित्रं क्षेत्रं प्रणम्य मोहिनीरूपं भगवन्तं रमाकान्तमतिक्रम्य तत्क्षेत्रं भीमानदीजनिभूमौ डाकिनीवने नीपवने घने निखि-

१ गोदानकर्तारः । २ प्राप्तपुरुषार्थाः । ३ 'नेवासे' इति प्रसिद्धम् ।

लसुरस्तोमातङ्कहरं भीमाशङ्करं निखिलनयनमात्रज्योतिःस्वरू-
पिणमिति न्यूनतामपहर्तुमिव शुद्धज्योतिःस्वरूपं नयनपद्वीजङ्घा-
लमारचय्य विरहय्य तामपि स्थलीमन्यत्र कचिन्निखिलजनोद्-
ण्डाज्ञानमण्डलविपतरुखण्डखण्डनप्रचण्डदात्रे मार्तण्डक्षेत्रे निर्म-
लजलहारितीर्थनिकटमावसन्तं नित्यतेजोनिधिं त्रयीतनूमपि मां
तनूकृत्य पृथिव्याद्यष्टमूर्तिता प्रकटिता त्वया को मेतिशयः प्रति-
पादित इति कुपितं मार्तण्डमाश्वासयितुमिव विमृष्टान्यनामवि-
चारमाश्रिततन्नामधेयोपपदं ईश्वरमभिवन्द्यानन्तरं च कविवनो-
दूरे मयूरक्षेत्रे प्रणिपत्य निखिलजगदभयदायकं विनायकमितर-
त्र गिरौ विलोक्य प्रवर्धितजगदुत्सवारम्भं शम्भुं महादेवमग्रतो
विलोकयन् विविधविलासिजनविहरणाभिरामानारामान् विपुलव-
नलक्ष्मीवक्षमुकुरशङ्काकरानपि पङ्कजाकरान् तत्रतत्र निरहा-
ग्निजकामिनीनृत्तपरम्परमुदितमङ्गलमृदङ्गध्वनिविनिध्वानबन्धुराणि
सिन्धुराजवसुन्धराधरनन्दनारमणमणिमन्दिराणि च पुरतः पार्श्वद्व-
यनिरन्तरशालाकाश्मतमणि कान्तानिशान्तबाहिरूपान्तप्रान्ततसंवर्धित-
नारिकेलपनसादिकीरकुलकलकलमुखरं राजराजिकातरं नीरानरसिंह-
पुरं प्राविशत् ॥ २ ॥

स्तम्भादुज्जृम्भमाणः पुरहरसुरराट् प्रस्तुतो ध्वस्ततोपा-
न्विश्वानाश्वास्य शश्वद्वसतिसुरनरान् धिङ्कृतां हा नृसिंहः १०॥
मञ्जुलवानीरायां नीरायां विरचिताप्लवोसौ मोदात् ॥
खेदान् परिधुन्वन्तं तन्वन्तं श्रियमियेष देवं द्रष्टुम् ॥११॥

तावन्निजागमनविचारनिशमनजनितनवैर्नरहरिपरिवारजनैः समर्यादं सज्जीभूतैरत इति नीयमानो मानवपतिरग्रतो जाग्रतो विलोकयँल्लोकांस्ताड्यमानभेरीकैर्नाद्यमानवीणैर्वाद्यमानवादित्रैश्चोद्यमाननर्तनैरापाद्यमानहस्ततालैर्नुद्यमानोत्कम्पवसनैर्भिद्यमाननारिकेलैश्चोद्यमानदिव्याम्बरैर्विद्यमानभगवद्दिव्यगुणैस्तुद्यमानजडजनैर्विद्यमानफलकुसुमैर्वेद्यमाननरहरिनामधेयैरासाद्यमानानन्दैराह्लाद्यमानपरस्परैरद्यमानताम्बूलैरखिद्यमानवदनैरुत्साद्यमानजनसन्दैः प्रसार्यमाणोपहारैरुदीर्यमाणतानैर्विचार्यमाणशास्त्रार्थैरुदीर्यमाणानन्दबाष्पैः प्रचार्यमाणनिर्गमघोषैरुच्चार्यमाणपुराणैर्विस्फार्यमाणलोचनैरुद्धार्यमाणाञ्जलिपञ्जैराकार्यमाणस्वस्वजनैरापूर्यमाणभक्तिभिरुत्प्रेर्यमाणकुसुमैरवार्यमाणपुलकैरास्मर्यमाणहिरण्यकशिपुमथनकथाविशेषैर्विस्तार्यमाणमार्गैः परिस्तीर्यमाणवसनैर्विकीर्यमाणलाजाञ्जलिभिस्त्वर्यमाणस्त्रीजनैर्ध्रियमाणाभरणैः क्रियमाणप्रणामैराद्रियमाणभागवतैर्वीज्यमानचामरैस्त्यजमानान्यविचारैरनुभुज्यमानभगवद्दिव्यविग्रहसौन्दर्यसेवनै रज्यमानहृदयैः परिष्वज्यमानमित्रैः सृज्यमानस्वस्वविद्याकौशलैरुत्तेज्यमानप्रदीपैर्विभज्यमानगोष्ठीकैः सज्ज्यमानचन्दनैः प्रसज्यमानपटवासकैस्तर्ज्यमानशब्दैर्नै-

---

१ मञ्जुला वानीराः वेतसीवृक्षा यस्यां ।

र्ग्यैज्यमाननीचजनैर्नीराज्यमानभगवच्चरणारविन्दैर्भ्राज्यमानमदीपैश्चानेकविधजानपदचातुर्वर्ण्यजनैः सर्पप्रदेशस्याप्यप्रदत्तावकाशं क्वचिन्निरन्तरसान्द्रचन्द्रशालाजालाग्रविसरदसदृशपद्मरागपुञ्जमञ्जुलमयूखरेखावलोकनजनितया समुदयदरुणकिरणकिरणसमुदयमनीषया क्षपास्वप्यपरित्यक्तप्रियतमाश्लेषैः सन्तोषैश्चक्रवाकैरलंकृतविटङ्कां क्वचिदुदग्रसौधाग्रयूथाग्रगवाक्षलक्षनिर्यत्ननिर्यत्ततादृशमुक्तावज्रमणिघृणिदर्शनसमुद्भूतया शिशिरकरकरनिकराधिषणया दिवापि लेलिह्यमानरसनैश्चकोरनिकुरम्बैः परिष्कृतदेहलीकां क्वचिदन्तरान्तराखचितसौवर्णलतावितानवलरिपुनीलसौधशतविलोकनोदञ्चितहृद्यविद्युल्लताशङ्कितसद्यःसमुद्भवदम्बुधरकदम्बबुद्धितया वर्षेतरसमयेपि निरन्तरकृतताण्डवैः शिखण्डिमण्डलैर्मनोहरां श्रीनृहरिदिव्यालयाभ्यर्णगेहवीथीं कथंचिदतिक्रम्य प्रविश्य भगवद्दिव्यालयं पुरतः सकललोकलोचनभागधेयमिव मूर्तिमूर्तिभूतं विनताखिलजनताधिकघनतापहघनतादृशमोदावहपादाम्बुजयुगलगदगणितततसितमुक्तामणिगुम्फाङ्कितहंसकसमहं—मकरन्दुतमतिरस्कृतिपतिमतिशतिश्रितजङ्घालसुजङ्घायुगममलाननकमलाश्रितकरिवरकरनिभशुभविभवोरुद्वयसदरुज्ज्वलहेमाम्बरधामाधिकघृणिमणिगणझणझणझणदाञ्चितघनकाञ्चनमयकाञ्चिकमतिराहृपमपाङ्गलग्नदरदरपरमोदारपरगुरसाधितमरसाहिहनिलयं धृतनतय गुणनुतमङ्गलोपशोभितमधिकं गदोल्लसितपरणकराकिरणमणगणमणिमराणिमरसुन्दरतरं हृदयमन्दिरसन्ततमभिमितदासजनर-

---

१ भरद्वाजिमन्द्रः। २ दिव तारशदादिषु पदवशिरदम्।

रुचिकलितकौस्तुभमणिं सततमिन्दुसुन्दररुचिं दयानिधिममन्द-सान्द्ररुचिसरससरसिरुहरुचिररुचिनिचयगिरिमभरमथनदक्षिणेक्षणमनुसृणक्षपितरूक्षराक्षसकुलं विकटमुकुटतटखचितरुचिरतरललिततलमथनमणिघृणशबलितनिजदिव्यविग्रहकान्तिं भगवन्तं प्रणतमरसिजमनिपुरहरं नरहरिं निजकुलदेवतं भावितहर्षोत्कर्षप्रमृमरपुलकोद्गमो विलोक्य नयनयोर्महोत्सववितरणेन सम्पादितानृण्यः पुण्यकर्मणामग्रगण्य इत्थमभितुष्टाव ।

स्फूर्जत्पर्जन्यगर्जाप्रसरणरभसोतर्जनात्यूर्जितैः स्वै-
रुत्कृष्टैरट्टहासैर्दिशिदिशि चलितैः सान्त्वसं सान्त्वनन्तम् ॥
चक्रे शक्रेशमुख्या दितिसुतनिकरस्यापि सोयं कथं वा
शश्वद्विश्वमपभाभयद इति भवान् गीयते गेयतेजाः ॥१२॥

त्वं स्तम्भभेदपूर्वकमुदितो भजतां समस्तमनुजानाम् ॥
प्रह्लादजीवनौषध विरचयसि स्तम्भभेदनं युक्तम् ॥१३॥

यदि च निवसेत्प्रह्लादस्यापरः सदृशः सुतो
भवति हि तदानिर्व्यपेक्ष्य प्रमोदभरो महान् ॥
इति मृगयितुं नूनं शत्रोर्बिभेद भवान् हरे
जठरमचिरान्नोचेद्रोषानलस्य कियान् म ते ॥१४॥

तादृशरोपेऽपि हरे लक्ष्मीदर्शनल्यात्मसन्नोऽसि ॥
अतिचण्डोऽपि धरिण्यां जायानिकटे प्रसन्न एव जनः ॥१५॥

एवं स्तुवन् स्वकुलदैवतमात्मवंश्य-
राजर्षिभिः शुभगुणैरपभक्तिरम्याः ॥

---

१ हर्षोत्कर्षप्रसरन् ।

मर्श्व नितान्तमृदुलं परितः प्रजाग्र-
द्वालाकरोल्लसितचामरचारुरूपम् ॥२३॥

अम्ब भार्गवि मर्त्यसिंहविभोर्महार्घपदाम्बुज-
द्वन्द्वसंवहनं मृदु प्रविधाय कोमलहस्ततः ॥
तत्र देवपदाम्बुजेर्पितसर्वपूजनसत्फला-
शेषमञ्जुलकोमलाम्बरमांसले शयनोत्तमे ॥ २४ ॥

इत्थं विष्वक्सेनवाक्यैः प्रहृष्टः
श्रीमान्यावद्धाति नीरानृसिंहः ॥
तावन्मर्द मन्दमात्तापसर्वः
प्रायाद्भूपालोपि नैजोपकार्याम् ॥ २५ ॥

अन्येद्युः ।

रसालफलशङ्कया ग्रहणसंमुखीर्नैर्मिथः
प्रबुध्य कलहैर्ह्रपैः प्रचुरपुच्छविच्छोटनात् ॥
महामणिरिवोदधेर्वियति दूरमुट्टङ्कितः
शुशोभ तरणिस्तदा समुदयन् बलारेर्दिशि ॥२६॥

कृतनिखिलाह्निकाः स्मृतबहुश्रुतिशास्त्रगणा-
भृतशुभभक्तयस्ततमहार्घगुणा निपुणाः ॥
नरहरिसन्निधेर्गुरिभृताञ्जलयः सुधियः
परिचरणानि तस्य परितः परितस्तेनिरे ॥ २७ ॥

प्रजिद्दयंश्चवम् ।

---

१ स्वर्गापगृजाम् । २ इन्द्रस्य । ३ प्रसारयामासुः ।

श्रीदेवदेवकरुणाजलधे मुरारे
प्राभातिकाम्बुजमदापहनेत्रकान्ते ॥
नीरातटात्तनियतालयरम्यमूर्ते
श्रीमन्नृसिंह भगवंस्तव सुप्रभातम् ॥ २८ ॥

हरिर्हरिर्हरिरिति मञ्जुभाषितं
द्विजावलेः सपदि निशाम्य कौतुकात् ॥
द्विजव्रजोप्यनुवदतीव कूजितैः
कृपानिधेच्युत नृहरे प्रजागृहि ॥ २९ ॥

अन्तर्हिता लसति धामनिधौ प्रकाश-
मत्यन्तमेत्य जनयञ्जगतां प्रबोधम् ॥
प्राचीप्रदेश इह देशिकवद्विभाति
नीरानृसिंह भगवंस्तव सुप्रभातम् ॥ ३० ॥

गाढा विद्येव रात्रिर्विगलति न चिराज्ज्ञानवज्ज्ञानुजेनः-
प्रोन्मील्त्यब्जबन्धुर्जलजनयनवद्दृक्पथं याति मन्दम् ॥
आनन्दं याति सान्द्रं मुनिवरकुलवद्देव सर्वं जगच्च
श्रीमन्नीरानृसिंह प्रभुवर नयने किञ्चिदुन्मीलयस्व ॥३१॥

काहलडिण्डिममण्डलझर्झरपणवाद्यवाद्यानाम् ॥
संस्पर्धयेव निनदा जृम्भन्ते सुप्रभातमच्युत ते ॥ ३२ ॥

इत्यभिष्टुत्यार्पितान्तैः सत्यधीभिः श्रियः पतिः ॥
पूजां यावत्प्रगृह्णाति राजा तावदगान्मुदा ॥ ३३ ॥

संसेव्य निर्जरगुणोत्तंसं दितिसूनुहिंसनं देवम् ॥
प्रत्यात्मावनिपालो निन्ये स सुखं दिनं तत्र ॥ ३४ ॥

२

श्रीशैलवंशतिलकः कृष्णः कविसार्वभौमबिरुदाढ्यः ॥
तार्तीयिकं विलासं विदधे रघुनाथविजयेऽस्मिन् ॥३५॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वास्तृतीयो विलासः ॥ ३ ॥

—:०:—

## चतुर्थो विलासः ।

कतिचन दिनानि तत्र क्षितिपालो व्युष्य हृष्यदनघमनाः ॥
अगणितविभवस्तस्मान्नगरात्प्रस्थानमतनुत बलेन ॥ १ ॥

अताडयन्त दुन्दुभीनमर्दयन्त मर्दला-
ननादयन्त काहलानसज्जयन्त वारणान् ॥
अवल्गयन्त घोटकानधारयन्त खेटका-
नहेषयन्त सैन्धवांस्तदा मुदा जना घनाः ॥ २ ॥

बालं कञ्चन मामकान्वयमणिं बभोति चित्ते भवा-
न्नामास्यं नहि मुञ्चसि क्षणमपि त्वं कस्य हेतोरिति ॥
प्रष्टुं किं समुपागतेव रविणा छत्रेण हैमात्मना
कान्तश्रीरधिरूढतुङ्गतुरगः श्रीपाण्डुरङ्गं ययौ ॥ ३ ॥

उन्निद्राक्षैर्नितान्तं कृतपटुनटनै रुक्मिणीविठ्ठलेति
श्रीमन्नामोच्चराद्भिः कटिघटितपटैर्हस्ततालप्रशस्तैः ॥
हस्ताभ्यात्तप्रदीपैर्धुतदुरितचयैर्देवदिव्याङ्कपाली-
भाग्या भक्तैः समन्तादपि निबिडतमं सन्ततं यत्समिन्धे १।

१ अङ्कपाली सिंहासनम् ।

प्रातीयं हृदयाम्बुजं चिरतपोभ्यासात्समुन्मीलना-
द्दीपच्छोचनयोर्गमिष्यति बहिर्लक्ष्याय नः श्रीपतिः ॥
इत्यामील्य दृढं विलोचनयुगं ध्यायन्ति यत्राच्युतं
मानन्दं मुनयो भवन्ति मनुजाः कृच्छ्रार्जिते सादराः॥५॥
यद्दीक्षाल्पलेशलेशकणिकालाभाज्जनाः केचन
स्वर्गेशानपि निर्भरं विदधते भिक्षाककोटौ क्षणात् ॥
तां लक्ष्मीं विदधद्दशोपि भगवान्यः पाण्डुरङ्गस्थलीं
त्यक्तुं जात्वपि नेच्छतीह बत तं राजा ददर्शाच्युतम्॥६॥

एवमस्तौपीत्साञ्जलिबन्धम् ।

सायन्तनकुवलयमदहरणचणस्निग्धमुग्धदिव्याङ्गम् ॥
ध्यायन्ति यं मुनीन्द्राः सोसौसाक्षात्कृतः सरोजाक्षः ॥७॥

सपुलकाञ्जलिबन्धम् ।

वेदान्ताभरणे श्रयामि चरणे ऊरू तयोरुश्रिया
बाहू चापि बहूज्ज्वलौ हृदि भजे वक्षश्च लक्ष्मीयुतम् ॥
वन्दे चन्दिरसुन्दरं च वदनं फालं च कस्तूरिका-
नीलं कुन्तलजालचुम्बितकनन्मूलं च मौलिं भजे ॥८॥

अपि च ।

हरिरसङ्गतिरिव तव भगवन् सर्वार्थदानहेतोस्ते ॥
अवतारस्तदपि त्वं न कदाचित्त्यजसि पाण्डुरङ्गमपि॥९॥
देवेश चन्द्रभागाश्रितो विधुश्चासि तदपि यद्भगवन् ॥
श्रीपुण्डरीकवरदाभिख्यां वहसे तदेतदतिचित्रम् ॥१०॥

अन्यच्च ।

तप्त्वानर्घं तप इह चिरात् प्रार्थितं यन्मुनीन्द्रै
रुक्मिण्या अप्यसुलभतमं दिव्यमालिङ्गनं ते ॥
धन्या एतेऽनुदिनमपि तत्प्राप्य हर्षं भजन्ते
मालापिष्टातककरतलाः किं ब्रुवे धन्यतां ताम् ॥ ११ ॥

कथयन्ति विठ्ठलविभोरात्मज इति मां ममावनभरोपि ॥
न स्यात्कथं तव हरे तनुजं को वा न पालयेल्लोके ॥ १२ ॥

किं बहुना ।

नित्यं भक्तजनावनेन च नृणामालिङ्गनैरतादृशै-
र्लक्ष्मीकान्त निपीडितोसि न यदि त्वं पाण्डुरङ्ग प्रभो ॥
कट्यां न्यस्तकरः सदापि कुरुषे संवाहनं हा कुतः
पाह्यस्मानपि ते विचारयति कः श्रान्तिं कथं वाप्यसे १३॥

इत्यभिष्टुत्य गृहीततत्प्रसाद उषित्वा तत्र दिनानि कानिचित्तावत्समुदयति घनतरोप्मयुवकामिनीकुचकनककलशपरिरम्भसंभ्रमसमात्तधैर्यतरुणसमुदये हेमन्तसमये स्वाधिकतरागस्त्यमहामुनिमहामहभरावधूततयेव मन्दीभूततेजस्याश्रितदाक्षिणायने तीक्ष्णभानौ शीतकरायमाणे धामनिधिमण्डलविधुरायां नितान्तरतान्तपरिश्रान्तिजनितघर्मजलनिर्मृष्टतिलकायामिवाम्भलल्लनायां दिशायां धनदगोपायितायां दुःसाध्यतरमानिनीमानमहापिशाचदूरोच्चाटनहेमन्तमान्त्रिकमन्दानिलफूत्कृतोद्दङ्कितविभूतिभ्रमावहहिमानीसमानीततुषारभारे दशदिशाभ्यन्तरे निर्भरविजृम्भमाणयौवनोष्मानिस्तनयुगलाविरलाश्लेषदूरीकृतहिमोद्वेगसरागहृदयतरुणकामुकनिकरमविशेषदष्टरदनवसनदलास्वपि प्रालेयशीकरानि-

करस्फीतसात्त्वत्रणिताधराणां जनानां वचनीयतामनुपगतासु मु-
ग्धवनितासु अनातनिर्मलहर्म्याग्रभागशयनमनुद्घाटितगवाक्षमव-
नमारचन्दनचर्चनमकुसुमहारोपहारमव्यजनिकतालवृन्तवीजनं के-
वलकस्तूरीचन्दनलेपनमतिमात्रताम्बूलचर्वणं रोङ्कवैकवसनं गाढालि-
ङ्गनमात्रसारमनुभवन्तीषु सर्वरात्रं कामिनीषु कामुकैः सह रतो-
त्सवमेवमनिकान्तेषु तद्दतुदिनेषु विसृज्य तां नगरीमवाप्य कोल्ला-
पुरीं तत्र भागधेयं भगवतो नारायणस्य भगवन्निवासकृतार्थम-
स्यद्युनातद्धर्मदाराणामपि निलयीभूय सेवया कृतार्थयामि जन्मे-
ति निश्चित्य दृढात्मना परिणतेन किरणसहस्रशोणदेदीप्यमाने
चण्डकरमण्डल इव सुवर्णसहस्रपत्रे समासीनां शरणागतमनङ्ग-
दयादपद्दनं रागातिरेकमिव प्रकाशयद्भ्यां अरुणारुणाभ्यां चर-
णाभ्यामुद्भासमानां जननीस्नेहदर्शनकुतूहलपरिरम्भमाणविबुध-
तरङ्गिणीसंशयवहस्तकुम्भपीनाङ्गी दिव्यविग्रहलावण्यमन्दा-
किनीमध्यारोपिनिमग्नयौवनैरावतकुम्भाभ्यामिवोन्मग्नप्रकाशमाना-
भ्यां कुचाभ्यां प्रकटितोत्तमस्त्रीलक्षणां निजमहिमानमनुकुर्वद्भ्या-
मिव श्रुत्यन्तगणवीथ्यां नयनाभ्यामानन्दितमुकुन्दहृदयां निजा-
न्तेवासिनः प्रति दयालुं कारयितुं समाश्रयता शुकेनेव वजनि-
ष्केन विभ्रमस्फुरत्कालनलां पुरास्थितनासाचम्पककौरमीचकितनया
पश्चाद्धावमानया यौवनारम्भमधुकरमालिकयेव वेणीलतया परि-
ष्कृतां भगवतीं महालक्ष्मीं राकाशशिवदनां कुन्दकुड्मलरद-
नां जगज्जननीमनीनयद्दक्षिपथम् ।

---

१ मृगलोमवस्त्रम् । २ विभ्रमं प्रकाशमानम् ।

अथ नुतिवाक्समाश्रितनिरङ्कुशतत्करुण-
पुरमपि तद्विसृज्य नगराणि नदीश्च गिरीन् ॥
कतिपयवासरैरतिपतन् द्विरदैस्तुरगैः
सह पथि कृष्णवेण्यभिधशैवलिनीमभजत् ॥ १४ ॥

दत्तात्रेयं सोभिवाद्याथ तत्र
श्रीमांस्तीर्त्वा धूतकर्ण्णा च कृष्णाम् ॥
सूर्यासक्तां तां सदामन्दसेव्यां
छायाभिख्यां देवतामैक्षतासौ ॥ १५ ॥

महाभाचारकुशलद्विजराजनिषेवितम् ॥
कनकाचलनामानं ग्रामं भेजे ततो नृपः ॥ १६ ॥

सुरालय इति प्रथां भगवदाश्रयादात्मनो
व्यपोहितुमना निजाकृतिमपोह्य लज्जाभरात् ॥
पुराकृतिमुपाददे धरणिसीम्नि मेरुर्न चे-
त्कुतोस्य विदिता भवेत्कनकागिर्यभिख्या पुरः ॥१७॥

तत्र च भगवन्तमखिलजगदुत्पत्तिस्थितिविलयकारणं दुस्तरभवजलनिधिमहावर्तपरिवर्तनविवशार्तजनदूरार्तिलताकर्तनप्रहरणं प्रणमदमरपारिषद्मुकुटतटलुठदरुणाम्बुजमातिशाङ्घ्रिचरणं त्यक्तबहुचिरभवद्वृत्तिपट्टभक्तिरसासिक्तनिजचित्तभवमुक्तजनमनस्सौधनिराबाधविहरणं महस्ततिनिस्तुलरमास्तनस्तबकवास्तव्यकस्तूरिकामोदमदशास्तिसौशस्तिककौस्तुभाभरणं रमालोचनचकोरहारिणाकिरणं क्षमानिततसरोजपदचरणं नीलाविलासविहरणशरणं शरणागतजन-

१ धुत कर्ण्ण पार्णं यया सा ताम् ।

नभरणायत्तकरुणं कनकगिरिपुरसरसिजारुणं निखिलमुनिजनपरायणं नारायणमवलम्बितनृसिंहरूपमगणितमहामहिमाटोपं संसेव्यबहुतरं स्वायत्तीकृततदनुग्रहः निर्गत्य तस्मात्पुरादतिलङ्घ्य विरचितनिखिलजनतुङ्गभद्रां[१] तुङ्गभद्रामतिक्रम्य गव्यूतिद्वयमात्रं मार्गं चण्डचण्डपुण्ड्रेक्षुकोदण्डभुजदण्डहिण्डमानकोदण्डमण्डलीसमीरितनिशितमुखशिलीमुखविकलीकृततरुणमिथुनकलितविविधलीलालालितमञ्जुनिकुञ्जपुञ्जराजितोपान्तवनिकावनिकान्तकान्तनितान्तनिरन्तरकन्दलितसन्तानसन्तानसरलबकुलक्रमुकमुखविविधविटपिनटुलविटपपटलाञ्चलचञ्चलचञ्चरीकसञ्चयसञ्चलितमञ्जरीजरीजृम्भदमन्दमकरन्दबिन्दुसन्दोहसन्ततविहरमाणशुककोकिलमुखविहगकुलचोटीपुटकोटीकुट्टनपरिपाटीपाटितनारिकेलरसालमुखविशालतररसालफलजालनीरन्ध्रनिष्यन्दमानसरसतररसधारासाराम्रेडितमाधुर्यगाम्भीर्यमङ्गलतरतरङ्गतुङ्गभद्रान्तरपरस्परपारेरम्भारम्भजृम्भितसारसलक्ष्मणापक्षविक्षोभदरविदलदविरलदशशतदलमुकुलगर्भनिर्भेदाविर्भवन्निर्भरसौरभकरम्भितमन्दानिलसेवापरवशायुवजननिविडान्तरं त्रैलोक्यपावनतुङ्गभद्रान्तरङ्गनिमज्जनकुतुकावतीर्णसुरनिकरतटभूस्थापितासमानलसमानविमानसंशयाशंसिदेवालयशतकोटिसहस्रनिबिडितं प्रविश्य हेमकूटगिरितटघटितवसतिविरूपाक्षक्षेत्रं नाम किंचन पवित्रं स्थानं तत्र दिव्यालयमध्यभुवि परमेश्वरनित्यनिवाससौभाग्यकलितमद्विलासकैलासवैशिष्ट्याक्षमतया तत्साहस्यावलम्बनाय समागतमिव सुमेरुगिरिमुत्तुङ्ग-

---

१ तुङ्गमतिशयेन भद्रं शुभम् । २ रसभारितानि ।

कनकपीठमधिवसन्तं गिरिराजतनुजायामपि तत्प्रीतिरधिकेति रुषा जटाजूटाटवीमध्यमावसन्तीं सिद्धस्रवन्तीमाश्वासयितुं त्वमेकैव मम प्रियेत्यात्मना घटिकाखण्डलिखितामिवैकत्वबोधकाम्भवर्णरेखां सितकररेखामुत्तंसयन्तं किरीटतटलुठदमरतटिनीतरङ्गसमुन्मीलितलताप्रताननेनेव जटाजूटेन कामपि कान्तिं बिभ्राणमदभ्रां शिरसि मानितोऽनेनेन्दीवरबन्धुरतनन्धय इतीर्ष्यया तत्साद्दश्याश्रयणाय तन्निकटजायमानेन बालसूर्येणेव तेजोमयेन निटिलेलोचनेन कल्पितानल्पाकल्पं बलरिपुमणिमदविधुतिनिपुणनीलकण्ठतया लालयति नित्यं प्रियतमां मम सखीं शिरसा स्वरङ्गणतरङ्गिणीमप्यस्य प्रिया भवामीति कण्ठाश्लेषमातन्वन्त्या कालिन्द्येव कलितं विरिञ्चिपञ्चायुधपञ्चाननास्त्रयो वयमिह त्रिजगत्प्रख्यातवैभवा इति सूचनायेव त्रिशूलं दधानं निधानं निखिलसम्पदां जटाजूटघटितस्य निजाधिनाथस्य कलानाथस्य कार्श्यं वीक्ष्याश्रयान्तराभावकातर्यमापन्नमैन्दवमिव कंचन कुरङ्गबालकं कालयन्तं करतलेन समाश्लिष्टं गौर्या विद्युतेव शारदाभ्रं मुग्धास्मद्दम्भं कुतो बभासि कपर्दे इति प्रार्थयितुमुपागताभिस्तारावलीभिरिव मुक्ताहारावलीभिरलंकृतं चन्द्रिकयेव परिपूर्णचन्द्रं हिमान्येव हिमवन्तमाम्भोद्भूतस्फटिककान्त्येव रजताचलं इन्द्रवज्रप्रभयेवैरावतं विभूत्या समुज्ज्वलितविग्रहं विरचितकुसुमायुधनिग्रहं दक्षाध्वरध्वंसदक्षं विरूपाक्षं चिरतरमभिवीक्ष्य प्रणम्यप्रणम्यानन्दसिन्धुजलमानुपायमाणमानसोभूत् ।

१ चन्द्रलेखाम् । २ देवनदी । ३ भालनेत्रेण । ४ जटाजूटः । ५ हिमसमुद्गपः । ६ अभ्रम् ।

निशम्य तत्रैत्य जनेन वर्णितां सहस्तिकोणाख्यपुरस्य रम्यताम् ॥
तत्रैव तमुं तप आत्तकौतुको विनिर्ययौ श्रीरघुनाथभूपतिः ॥१८॥

अविदूरे च क्षेत्रस्य तस्य चक्रतीर्थपरिसरे ।

सुन्दासुरेन्द्रसुतसन्दारणस्फुरदमन्दाग्रदोर्बलवरं
सन्दानितत्रिदशवृन्दाग्र्यपङ्क्तिमुखानिन्दावहस्वचरितम् ॥
वन्दारुकाग्रसरवृन्दारकेशसुरवृन्दानतिक्षणगल-
न्मन्दारकल्पवरकुन्दादिसत्सुममरन्दाभिषिक्तचरणम्[1] १९॥
आतारकधूतानवभूताधिपचापं सूतादिमगीताद्भुतपूतात्मचरित्रम् ॥
भीताखिलभूताभयदातारमजस्रं सीतापरिणेतारमुदीताद्भुतहर्षम् २०

वीरं सुकुमारं नितमारं निजलक्ष्म्या-
धीरं गुणनीरन्ध्रमुदारं क्षितिपालः ॥
कामं सुरसामन्तविभीमं प्रमदाचं
भूमण्डलसोमं धुरि रामं स ददर्श ॥ २१ ॥

दशरथगृहदुग्धाब्धौ यस्मिश्चन्द्रे कृतोदये जगति ॥
कुमुदानन्दः शान्तिश्चित्रं निशिचरमयं च संजातम् २२॥
वृषपर्वणानुकूला बभौ यदीया समुद्धृतापङ्कात् ॥
सीतानुषक्तमनसा येनानघकर्पकेण साऽहल्या ॥२३॥
निजचरितानीव मुहुर्बहुतेजस्सोमरहितानि ॥
युद्धानि यस्य तद्वच्छत्रुखरादियातुवदनानि ॥२४॥
तिष्ठायाति दशाननोद्य भवता प्रोक्तं तथैवास्तु ते
देवानांप्रिय युक्तमेतदपि मे नालुक्समासं पदम्[2]॥

१ मरन्दः पुष्परसः । २ अलुक्समासे देवानांप्रियो मूर्खः ।

तूर्णं दर्शय मे स्वसारमथ तां या लक्ष्मणेन क्षणा-

द्विभाभूदिति रावणोक्तमखिलं योखण्डयद्वाग्भरैः ॥२५॥

लङ्का विभीषणेनाधिगता यदनुग्रहेण तज्ज्यायान् ॥

विपरीतवर्णलङ्कावाच्यं यस्याग्रहेण समवाप ॥२६॥

श्रीमानशेषभुवनत्रेता नेता विदेहतनुजायाः ॥

मङ्गलमुत्तुङ्गतरं तरङ्गयतु नः कृपानिधी रामः ॥२७॥

इत्यभिष्टुत्य नृपतिः प्रत्यर्प्यास्मै समर्हणाः ॥

यन्त्रोद्धारकनामानं मानयामास मारुतिम् ॥ २८ ॥

लङ्कालंकृतिसीम्नि दैवतचमूद्धारणे तोरणे

यः श्रीमान्पृतनापतीनगमयत्पञ्चापि यत्पञ्चताम् ॥

तद्युक्तं खलु राक्षसानपि तथा सत्यापि सत्यार्चिषा

तुल्यान् द्रागतनोदिदं बत तयारीति सहस्राण्यपि ॥२९॥

श्रीमन्नवदुर्गस्थः कृष्णः कविसार्वभौमविरुदाढ्यः ॥

तुर्यविलासं विदधे जवेन रघुनाथविजयेस्मिन् ॥ ३ ॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वा-श्चतुर्थो विलासः ॥ ४ ॥

—:०:—

## पञ्चमो विलासः ।

तदनु प्रणम्य तं लोकोत्तरनदीपसौन्दर्यसंदर्शनकन्दलितान-न्दो रघुनाथराजमहेन्द्रः किंचिदन्तरमीशानोपासनासनतरप्रमी-

---

१ ताक्यम् । २ सन्दराभ्राः । ३ मानम् । ४ गात्रा ।

तदुचितमतीव तद्दिशाभिमुखमुपसृत्य सर्वोत्तरतपःसिद्धये समाश्रयितव्या तादृश्येव दिशेतीवोत्तराभिमुखमुच्चलन् नितान्तसमुन्मिषद्वसन्तकालागमोद्भिन्नदेलालवङ्गतरुमालासुपुष्पद्रसालावलीनक्तमालाप्रदीव्यत्तमालातिपल्लवितपालाशभूमिरुहजालामिताशोकसालालिमेदुरतमेलाद्भुतोपवनमालासमुन्मिषितदोलाविशेषशुभलीलाविनोदभरलोलान्तरङ्गवननीलालकौघपुरबालामणीमधुरतालालिवीणाकलालापमूर्छनद्रवीभूतसन्निहितकलाधरणिशिलासमुदयतलामितोदितविमलविमलाम्बुनिर्झरपरिमेलनद्विस्त्रिरुक्तधवलिमनिजभङ्गभद्रां तुङ्गभद्रां सघुर्घुरारवमुत्तानकर्णयुगलमुत्तम्भितग्रीवं प्रतीरैकदत्तदृष्टितीर्णेषु तुरङ्गमेषु सफूत्कारं कराग्रसमुत्कीर्णशीकरनिकरं मन्दं मन्दतरमुच्छ्रस्ततरेषु हस्तिवरेषु संतीर्य स्वयमप्युत्तरैततटे विद्यानगरकारिकोणपुरपर्यायनामधेयां समृद्धसर्वापणानुबन्धां प्रविनयं किष्किन्धां सत्यसंधो वसुन्धराधुरन्धरोयं प्रत्युद्गतस्तत्र समेधमानै राजवंश्यजनैर्निखिलजगच्छ्लाघ्यरामणीयकं तत्र क्वचन तुङ्गभद्रातरङ्गमन्दानिलदत्तसपर्याविशेषं कलिततोषं चिन्तामणीश्वरक्षेत्रापरनामधेयं कपिलाश्रमं नाम प्रदेशं विविधदेवालयनिविडिबसदेशं प्रविश्य विलोकयन् कमलपालिकामधुरमधूलिकापानकेलिकामुदितमं भरततिजम्भितझंकृतिवाचालतया निराबाधविहरमाणमहामत्स्यपुच्छविघट्टनचलाचलकह्लारतया च सचाटुवचनं साशिरःकम्पं सन्निहितचिन्तामणिक्षेत्ररामणीयकं श्लाघमाना-

१ विराधिल्लः । २ प्रतीरं तटम् । ३ पारतटे ।

भिरिव सौगन्धिककलताभिरभिशोभितां प्रथितभङ्गमुद्रामप्यप्रथितभङ्गमुद्रां तुङ्गभद्रां न पुराय न राष्ट्राय न परिजनेभ्यो न बान्धवेभ्यः स्पृहयांबभूव चन्द्रशेखरसपर्याचर्योदत्तचित्तसंवर्द्धिततुलसीकुसुमारामः सगुणाभिरामः सरामोनयन्वसन्तसमर्भ विविधशुकपिककुसुमोदन्तमयम् ।

मौनव्रतप्रदाता वनप्रियेभ्यः सदेदमुचितमिति ॥
उदयाय तपःकालस्त्वरयन्निव तमेनमवनिपतिम् ॥ १ ॥
तापोधिके खरकरस्य मरुत्प्रचार-
वार्तालवेन रहितेषु दिगन्तरेषु ॥
श्रान्ता अनूरुगमितास्तुरगा बभूवु-
र्मार्गोस्ततोहरजनिष्ट नितान्तदीर्घम् ॥ २ ॥

शुचिरेष नृपालमखिलस्तपस्यतीत्यात्ततदवलोकारयः ॥
कलिततपःशुचिरिति भुवि मासः ख्यातः समभ्युदायिष्ट॥३॥

किष्किन्धादिसरम्यदेशविभवो नासीन्मया लोकितो
द्रष्टव्योह्यधुनेति जातकुतुकां संलालयञ्जानकीम् ॥
प्राप्तश्री रघुनाथ एष चतुरो मासान्वसेद्भूपतिः
साम्राज्यं कलयन् मुदात्र पुर इत्यासीत्प्रवादो नृणाम्॥४॥

शुचिमासे शुचिपक्षे शुचिचरितो धरणिपालवर्योयम् ॥
शुचिकिरणशेखरं हरमुपासितुमुपक्रमं व्यधायुक्तम् ॥ ५ ॥
विरचितनियमो राजा विरजोम्बरभूषणो जिगाय तदा ॥
भूम्युन्ततनिबिडरजःकलुषाम्बरभूषणं स राजानम् ॥ ६ ॥

---

१ शुचिगणः । २ शुक्रपक्षे ।

एकादश्यां नियमादुपासितुं चन्द्रशेखरं नमयन् ॥
उपचक्रमे विजानन् शुक्लं तद्रूपसंख्यदिनमेतदिति ॥७॥

स्रवन्ति मय्यात्तनिमज्जनानामेवं हि पापान्यखिलान्यपीति ॥
निदर्शयन्त्यामिव तुङ्गभद्राभिधस्रवन्त्यां नियमात्स सस्नौ ॥८॥

रचिताह्निकः स राजा मौनान्वयमात्मनः स्फुटीकर्तुम् ॥
मौनान्वयैकलितश्चिरमजपत्पञ्चाक्षरीतिदिव्यमनुम् ॥९॥

स्मारयति त्र्यम्बकमिह सैषामियं(?) च तद्ध्याने ॥
द्रष्टव्येतीव विभुः स नासिकाग्रे दधौ दृष्टिम् ॥ १०॥

चिरमेवं विधाय सुधाकरशेखरचरणनलिनध्यानमाराध्य तं विरचितमहासंहितादिपरायणः निर्वर्तितमाध्याह्निक उपात्ततुलसीकुसुमसम्भारः कल्पितनियमाडम्बरः परिचिततात्कालिकजपतत्त्वः कृत्यविदामग्रणीरग्रतश्चन्द्रशेखरसपर्यायामेकेन वपुषा पर्याप्तिममन्यमानतया निजकिरणसंख्याकानि वपूंषि स्वीकृत्य समागतेन सहस्रभानुनेव बहुधतरखचितपात्रनिकुरुम्बेण रमणीयपुरोभागं रत्नपीठमधिवसन्तं रघुनाथमहाराजमनुगृहीतुं धरणीतलमवतीर्णमात्मानमभ्यर्हयितुं रजतधरणिधरेण प्रेषितमिव स्वकिशोरकं निशाधिनाथचन्द्रशेखरसारूप्यावलिलम्बायिषयेव शिरोभागन्यस्तेनार्धचन्द्रेणेव शेखरितं शृङ्गद्वयेन अष्टमूर्तिपदाग्रपरिचरणधुरीणतामात्मनः स्फुटीकर्तुमिव प्रत्येकं खुरद्वयकलितैश्चतुर्भिः पदैः रमणीयं स्फिग्देशालवालनिरङ्कुशोज्जृम्भितान्तःसत्त्वविशेषलताशङ्काकरेण स्वच्छेन पुच्छेन मनोहरं वृषवरं निखिलजगदानन्दिनं नन्दिन-

---

१ एकादशसंख्याकम् । २ स्रवन्ती नदी । ३ मुनिवंशम् । ४ जप्याक्षरयुतः । ५ शिवमन्त्रम् । ६ नासिकाग्रे नामाग्रे च । ७ निकुरुम्बः समूहः ।

मधितिष्ठतो निजशेखरशशिकरलक्ष्मीदर्शनासहनमेतदिति रोषादात्मनाधीकृतस्येव तामरस्य(?) हेममयस्य कर्णिकामलङ्कुर्वाणं निःर्वाणदाननिपुणं गीर्वाणपरिवृढविनुतगुणं राजहंसमिव मानसतामरसमनोहरं मया किलायं कृतचूडामणिः परमेश्वर इति संजातमदावष्टम्भे कुमुदबान्धवडिम्भे तद्गर्वनिर्वापणाय स्वयमेव परिपूर्णचन्द्ररूपमिवाश्रयन्तं चिरन्तनं सरस्वतीमुकुटाग्रभूषणमहावज्रमाणिमिव विद्योतमानं लिङ्गाकारं सान्द्रधीकरं चन्द्रशेखरं नयनेन्दीवरानन्ददं विरचय्याभ्यर्च्य विविधोपचारैरनुदिनमपि वरुणदिगङ्गनानान्तःपुरान्तरचारिणि पूषण्याचरितसायन्तननियमोभ्यवहराम्रियमवशाद्भव्यभव्यमेव दिव्यमन्नमनुदिनमपि निजाभ्यर्थनया प्रवर्तिते सत्रमुखे दत्तसुखे निबद्धकटितटैरास्तीर्णपर्णैर्न्यस्यमानपत्रामत्रैरप्रमादैः सप्रमोदैर्विप्रसूदैः कृतेषु करिष्यमाणेषु क्रियमाणेषु समस्तवस्तुपरिवेषणेषु इतोपि किञ्चिदधिकं परिवेष्यतां वृतं किं त्वयोपार्जितं नश्यति वा त्वत्पित्रार्जितं भ्रश्यति वा आनीयतां सूपो यथेष्टं वयमप्युत्तराहा न दाक्षिणात्या इति जल्पत्सु केषुचित्सादरं कृतयुगपदापोशनेषु सर्वेषु मतत्रितयप्रवृत्तेषु शुभवृत्तेषु द्विजवरेषु कोटिशः सन्धीभूतान् भोजनकृते द्विजराजान् विलोक्य द्विजराजनामधेयमात्रजनितचापलरतताद्दशतत्रत्यभक्ष्यभोज्यलेह्यचोष्यादिवस्तुकोटिरसश्लाघनमेकेन मया कर्तुमशक्यमित्यसंख्यरूपाण्यालङ्घ्य समागतोयं सुधाकर एव शर्करालड्डुकाव्याजेन आहोस्विद्भूसुराणामपि सुधास्वादानन्दं सम्पादयितुं रघुनाथभूपाले विरचितानुग्रहेण निवासक्षेत्रकलितनियतनिवासेन महेश्वररूपेण भगवता प्रेरिताः स्युरमृतकलशा न चेदमीषां क

१ तादृश् ।

तावदीदृशी माधुरीति स्वच्छन्दं श्लाघमानेषु केषुचित्सुगुणोसि त्वं भव्यं यथामनोरथं विश्राणय खण्डलड्डुकानिति कुशले पृच्छति कस्मिंश्चिदाजन्ममनवलोकितैकाक्षरशिरस्कतया सूदपर्यायनामधेयमिति गुणशब्दमजानता तावतैव प्रमोदोच्छूनभुजेनौदनिकेन सादरं यथेष्टं तस्मै दीयमानेषु नैकविधमृद्वीकाखर्जूरखण्डशर्करानचुरेषु विविधभक्ष्येषु नवनीतं देहीति पृच्छत्यङ्गे कस्मिंश्चिदिदं नवनीतमेवोष्णतरं वर्तते न हि पुरानीतं स्वाद्यतामिति पायसप्रदानेनान्ययति तद्याच्ञां कस्मिंश्चन धूर्ते दयालुना राजनिग्रहभीतेन केनचिदानीय दत्तं नवनीतं शर्करामसृणितमेलासुरभिनमास्वादयति तस्मिन्निमे दाधिका एते चूर्लिनोपूपा एते लवणा इमे मौद्गा इमे शार्करा इति न्यस्य गच्छत्सु सूदेषु भक्ष्याणि प्राज्यदध्याज्यदुग्धनदीमातृकायमाणेषु चिन्तामणथाश्रमपरिसरेषु जग्धार्धकवलोनजग्धकवलांश्चर्वितमनोहराननाघ्रातमोदकानस्मृतनिश्वाज्ञानपेक्ष्यमाणाज्यान् काम्यमानलड्डुकान् परिमृज्यमानजठरभाण्डान् क्रियमाणसुरभिलजलपानानाद्रियमाणसुगन्धितान् स्तूयमानभक्ष्यरुचीन् पठ्यमानभोजगद्यान् स्वस्त्यस्तु राज्ञे रघुनाथाय न वयं निजनिकेतनानि स्पृहयामहे तिष्ठन्तु कूपकूर्मा इवानुदितकुतूहला जना गृहेष्वेव न वयं तथा पश्चादेतस्य गन्तव्यमेवास्माभिरिति कोटिशः कृतप्रशंसान् मुदितहृदयान् दृष्टदृष्टहृष्टान्तरङ्गो मन्दमन्दमितश्चन्दनमितः पुष्पसरा इतः पटवासक इतश्चन्दनतैलमितः पुष्कलकस्तूरीगन्ध इतोक्षता इतो दक्षिणा इतः ताम्बूलानीतः शुभ्राम्बराणीतो राङ्कवाणीति वदत्सु परि-

१ हैयंगवीनम् । २ नवं नीतम् । ३ दसमतनः । ४ पुष्पमालाः । ५ कस्तूरीगन्धः ।

जनेषु तद्विरचिता आशिषस्साक्षताः संगृह्णानः क्षणं तत्कथालापदत्तान्तरङ्गो निषसाद ।

चिन्तामणाविवास्मिन्वितरति सर्वार्थमागतार्थिभ्यः ॥

चिन्तामण्याश्रम इति सार्थं तस्य स्थलस्य नामासीत्[१] ११॥

तत्र कवय एनमित्थं मस्तुवन् । तत्र कश्चित् ।

मदर्शयति राङ्कवं प्रथमतः स राजांशुकैः

प्रमोदयति नूनथापहरते स्वदत्तां श्रियम् ॥

न दर्शयति किञ्चिदप्यथ ददाति चेच्छाधिकं

नं चाहरति सच्छ्रियं बत स एष राजापरः ॥ १२॥

इतरत्र ।

भवान्निष्कपटो दाता वयं निष्कपटार्थिनः ॥

दातृप्रतिगृहीतॄणां समा रीतिरहो इयम् ॥ १३ ॥

अपरत्र ।

दर्पश्चेन्न दया दया यदि भवेन्नौदार्यमेतच्च चे-

न्नैव स्यात्सरसत्वमेतदपि चेन्नो सत्यसन्धा भवेत् ॥

सर्वत्रापि जने समग्रसुगुणं न त्वादृशं कंचन

श्रीविश्वूरधिनाथशेखरमणे कुत्रापि नेक्षामहे ॥१४ ॥

अन्यत्र ।

कामः सुन्दर इत्ययं विजयते लोकप्रवादो महान्

किं तेनास्ति यदि क्षितौ प्रकटितं तत्सुन्दरत्वं भवेत् ॥

तेनानङ्गतया जितं सुललितं लोकस्य संमोहनं

रूपं श्रीरघुनाथभूपतिमणावन्यादृशं बिभ्रति ॥ १५ ॥

इतरत्र ।

---

१ मन्त्रमिदं ।

यत्त्वं पटं घटयसे विदुषामिह साम्प्रतम् ॥
नैय्यायिकाश्चरित्रं ते चित्रमाहुस्ततो नृप ॥१६॥

अन्यस्तावत्कवीन्द्रो रत्नावल्या स्तौति ।

निर्विघ्नमिहादधासि कविषु प्रीतिं त्वयायुष्मता
सौभाग्यं बहुशोभनं च दधता स्थैर्यं रिपूणां नव ॥
नित्यं स्यादतिगण्ड एव यदमूः श्रीमान्सुकर्मा भवां-
स्तत्ताद्धृतिमान् इदं ध्रुवमितत्त्वं शूलपाण्यर्चने ॥१७॥
संपत्ति भजतां त्वदीक्षणवशात्सुस्मेरगण्डाननां
वृद्धिं प्राप्य वधूर्ध्रुवं तव जगत्प्रीतिप्रदा जानकी ॥
निर्व्याघातवृषालिहर्षणविभो वज्राढ्यभूषाश्रितां
संसिद्धिव्यतिपातक्लेशरहितां सर्वत्र सम्पादय ॥१८॥
वरीयांस्त्वं नित्यं परिघनिभबाहुः शिवतमः
प्रसिद्धः साध्यं ते किमिह शुभमन्यद्विजयते ॥
समिन्धे शुक्रं ते यश इह हि सद्ब्रह्मनिरत-
स्त्वमैन्द्रश्रीभूयाश्चिरममुद्दर्दां वै धृतिहरः ॥ १९ ॥

अन्यस्तावत् ।

श्रीविठ्ठलेन्द्रवरपुत्र भवन्महार्घ
दानाम्बुभिर्भवति सन्ततमुर्वरा भूः ॥
नो चेदनेन कटुगर्जितभीकरेण
मेघेन हन्त विपदेन भुवः किमु स्यात् ॥ २० ॥

अथ यथाक्रममेव हरिततरकदलिकापत्त्रमरकतसिंहासनाधि-
रूढेन शाणोछोदवज्रैरेखास्मेरया घृतधारया सह धर्मचर्यापरि-

---

१ निष्कपटम् । २ रोगः । ३ धैर्यहारी । ४ सुवर्णरसपूर्णा ।

रब्धेन निजगुणानुरूपेण सुवर्णरूपेण शमिततापेन सूपेन(?)सचिवेन जनितजगदानन्दकन्दसरसतरखण्डकूष्माण्डदुर्वारसोवार्रिकफलविविधरसमूर्तवार्ताकतोपितजनजिह्वापटलपटोलाशाकुटकालशाकुटशाकैर्माहामात्रै(?) रसैः पङ्क्तिर्गुणैः सुन्दरतरमाकन्दादिफलवृन्दैः सेनाधिनाथैः सहकारामलकार्द्रकमयेनोपदंशेन शक्तित्रयेणातिरसैरतिरसैर्मनोहरैर्मनोहरैर्निखिलजगन्मोदकैर्मोदकैः संवर्धितजनहेलिकाभिर्होलिकाभिरुज्जृम्भितरसाटोपैर्लड्डुकापूपैः परिजनैः परिवृतेन समृद्धदुग्धपक्वधवलतरगोधूमापिष्टपरिकल्पितानल्पमृणालतन्तुसच्छात्रसेवाभिधभक्ष्यचामरसेवितेन माधुर्यदयान्वितेनाखण्डमण्डदधिखण्डवज्राभरणभूषितेन मारान्तकसीरायुधहीरानघदीप्तिदोरावहधीरेण क्षीरेणाभिषिक्तेन पिप्पलाभिधानधवलातपत्रपरिष्कृतोर्ध्वभागेन महाभागेन जगदुज्जीवनेन समृष्टशाल्योदनमाहाराजेनात्मनेव तोपितान् विरचितग्रन्थान् कल्पितचित्रबन्धान् कविताधुरन्धरान् सर्वविद्याढ्यांश्च विप्रान् बहुमान्य यथोचितं थलथलदनुपममणिसरविसरमुखनिखिलभूषणकनकमयदशमृगतनूरुहवसनधवलपञ्चांशुकादिभिस्तत्प्रदत्ताशीःप्रादुर्भूतायां च क्रोधनवत्सरविजयदशम्यां समापिततपश्चर्यानियमः प्रस्थाय तस्मान्नगराद्विराचितपम्पासरोवरनिमज्जनः सेवितकोदण्डधरो नमस्कृतविरूपाक्षः भोनितशङ्करभारतीयतिवरः परिशीलितमाल्यवद्गिरिनिलयरामचन्द्रचरणयुगलीसेवनो यथाक्रमं निर्वर्तितकुमारसेवाद्विविधपुण्यचर्यो यथापुरं प्रविश्यानेगुन्दीं पुरीं निर्गत्य निजपुराभिमुखं समन्ताच्च सन्नीभवद्वाजिग्रीकारपादातहुंकारबाणासत्यंकारभेर्यप्रभाङ्कारताळाळिझाङ्कारघातल्यदाङ्कारमातङ्गभीदृक्कारदक्षापटात्कारनादैर्विदीर्णासु दिक्षु प्रतिक्षिप्तकौक्षेयकेषु प्रचण्डेष्वखण्डेषु

१ षर्करी । २ लड्डुकः । ३ मारान्तकः शङ्करः सीरायुधो बलरामः ।

योषिल्लवालेषु दीपेषु जाग्रत्स्वरूपेषु अतुल्येषु भद्रेषु कुड्येषु सर्वत्र कल्यैश्च निर्लक्ष्यमुल्लोलकल्लोलमुत्काल्यमानेषु समर्दहानाय वेंत्रजैलव्रतत्राय विरचितनीरानृसिंहसंदर्शनोत्सवः समारुह्य हूणविरचितधूमशकटमतिमनोजवं दिनाभ्यां द्वाभ्यां सम्प्राप्य नासिकां प्रवर्तितत्र्यम्बकेश्वरमहारथोत्सवः प्रविश्य विन्चूरपुरं सुखेन साम्राज्यमनुभवन्विजयतेतराम् ॥ २ ॥

नीरानृसिंहकरुणाभाररघुनाथभूपतेर्नित्यम् ॥
साम्राज्यायुस्तनुभवसम्पत्तिः सुचिरमेधिषीष्ट भुवि॥२१॥
आनेड्डदीक्षितेन्द्रात्तिरुमलनृपतेः प्राप्तसन्मानवृत्तिः
श्रीमच्छ्रीसञ्जया(?)र्यामिधगुरुणा प्राप्तविद्याविलासः ॥
कृष्णां गोदावरीसंवलयितवनपर्त्यास्थपुण्याग्रगण्य-
श्रीमद्रामेश्वराख्यक्षितिपतितिलकास्थानकव्यग्रगण्यः २२
तत्ताद्दक्षात्मकरू(पो)त्तमपुरवसतेर्मुक्तराख्यान्वयेन्दोः
श्रीसीतारामभूमीपतिमकुटमणेस्ताद्दशास्थानभागे ॥
सन्धीभूतैःकवीन्द्रैःसमदकविघटागण्डभीरूढनाम्ना-
हूतःश्रीशैलताताभिधकृतितनुजो नूत्नदुर्गात्तवासः ॥२३॥
कविसार्वभौमविरुदाकलितः श्रीवेङ्कटार्यसहजातः ॥
रघुनाथविजयमेनं व्यतनोद्दिनमेकमेव कृष्णाख्यः ॥२४॥
गिरिकैरिगिरिविधुसम्मितिभाजि श्रीशालिवाहनस्य शके ॥
कोवनमपाश्विनसितदशमे रघुनाथविजय एष कृतः ॥२५॥
कविवाक्यम् ।

---

१ मिर्द्दः । २ सुवामिकद्रव्यैः । शके १५८७

यत्कविना कर्तव्यं तदिह त्वत्कीर्तिभूषणं भूपेन(?)सचि-
रघुनाथविभो कविवरविभूषणं तु त्वदायत्तम् ॥२६॥

इति कविकृष्णविरचितायां रघुनाथविजयचम्प्वां पञ्चमो विलासः ॥ ५ ॥

अधिकत्रिंशश्लोका गद्यं त्वेकं विलासके प्रथमे ॥
द्वैतीयिके च गद्यत्रितयं चैकोनविंशतिः श्लोकाः ॥ १ ॥
गद्यान्यत्र तृतीये चत्वारिश्लोककाश्चतुस्त्रिंशत् ॥
गद्ये द्वे चैकोनत्रिंशच्छ्लोकास्तथा तुर्ये ॥ २ ॥
गद्यत्रितयं श्लोकाः षड्विंशतिरत्र पञ्चमे कथितम् ॥
नवदुर्गकृष्णकविना जवेन रघुनाथविजयेस्मिन् ॥ ३ ॥

इतिश्रीशैलकुलतिलकवेङ्कटार्यवर्यपौत्रनवीनदुर्गपुरस्थिततातार्यवर्यविद्वच्चूडामणिद्वितीयतनूभुवः कृष्णकविसार्वभौमस्य कृतिषु रघुनाथविजयाख्यचम्पूप्रबन्धः समाप्तः ॥

—:०:०:—

मुद्रितमेतन्मुम्बय्यां गोपाळनारायणजनतया स्वकीये मुद्रालये ।

श्रीः

योधेप्ववाधेषु

रामकृष्णसूरिविरचिता

# भार्गवचम्पूः ।

## प्रथमः स्तवकः ।

श्रीपतिं प्रणमद्वृन्दारकवृन्दाभिनन्दनम् ॥

भवबन्धच्छिदं वन्द्यं वन्दे मान्द्यनिवृत्तये ॥ १ ॥

देवः शारदपद्मकोरकमदप्रध्वंसिपद्माकुच-
प्राग्भारस्फुटचारुपत्त्ररचनाचातुर्यरत्नाकरः ॥
लक्ष्मीनेत्रकटाक्षवीक्षणशरव्यापारलक्षीकृतः
क्षिप्रं पक्षिपतिध्वजो वितनुतां शस्तिं प्रशस्तं मम ॥२॥
निर्निमेषपदावाप्त्यै संविशन्ति वनेऽम्भसि ॥
गुणजालयुताः सन्तो धीवरा इति मे मतिः ॥ ३ ॥
मानससंचारिपदा भव्यगुणा भूतिमाश्रिता सरसा ॥
सत्कृतिरपि बहुकाकैः कलहंसीव प्रदूष्यते कुजनैः ॥४॥

तत्र ।

भाव्यालंकृतिहृद्य[illegible]सुपदन्यासोज्झितामस्कृतिः
क्वेयं नूनमनल्पदूषणपदं स्यादेव किं तावता ॥
सन्तः सन्ति सदा यदास्यसरणीसंचारिणः प्रस्फुर-
द्दोषास्तेपि गुणाः स्युरम्बुदमुखैरम्भासि सिन्धोरिव ॥५॥

अस्ति च चतुःसमुद्रवलयमध्यगतसकलवसुन्धराखण्डमण्डनं खर्वीकृतशर्वारिगर्वपर्वतैः विनिर्जितकोपाटोपैः स्फुरज्जटामुकुटविराजितोत्तमाङ्गैः पुरन्दरादिवन्दितवन्ध्यसुन्दरमुकुन्दपदारविन्दमकरन्दषट्पदैरविरतनित्यानित्यवस्तुविचारपरवशैर्मुनिजनैर्जनितसौभाग्यं सारिकासा रसहंसशुकचक्रवाककोकिपरपुष्टकण्ठध्वनिभिः पान्थानाह्वयदिवातिरमणीयमसमप्रदेशं कस्तूरीहरिणवराहसमुत्तुङ्गमातङ्गगवयकृष्णसारमृगपञ्चाननप्रभृतिभिर्वनचरैरप्यन्योन्यमवनपरैः पशुभिरधिष्ठितम् अधरीकृतनन्दनवनरामणीयकं निजाविमलकीलालबहुललोलकल्लोलोच्छलच्छलिततरतुपारपवित्रिताखिलराशे(?)जनाभखण्डमुकीर्तिकेतुपट्टैः स्नानार्थागतकिन्नरीगणनिर्धौतस्तनकुङ्कुमपङ्काङ्कितोत्तुङ्गतरङ्गवत्या भगवत्याः सरस्वत्यास्तीरम् ।यत्र परोपकारार्थजन्मानोऽनेकशाखिनः कमनीयपरिच्छदाः कनेपा इव पादपाः सन्ति । यत्र च लताः सर्वर्तुपुष्पवत्योपि अप्रदोषविकासिन्यो मुनिनिचयावचितकुसुमाः सन्ति ।

चूताश्वत्थकपित्थकुन्दतिलकप्लक्षाक्षसन्तानकै-
र्बिल्वानीलनमालतालपनसप्रोच्चप्रियालेङ्गुदैः ॥

खर्जूरार्जुनभूर्जलोध्रवकुलैराम्रातकाद्यैरपि
व्याप्तं तद्वरभूरिभूरुहगणैर्देवैर्यथा विष्टपम् ॥ ६ ॥

बहुलशकुनि विपुलार्जुनममितसकर्पभीष्मशतद्रुपदम् ॥
सुबहुशिखण्डिसमधिकं भारतचरिताद् सरस्वतीतीरम् ॥ ७ ॥

नूनमीर्ष्याभरादिव तयैव सरस्वत्या ।

अमरपुरसमृद्धिस्पर्द्धया वर्धयित्वा
निजरुचिरतटाक्रान्तसौभाग्यभाग्यम् ॥
तदनुभवसमोदस्तापसानां समूहः
समकृतसुरसम्पद्यस्य हः सस्पृहोऽपि ॥ ८ ॥

कदाचित्तत्र निगमाध्ययनचयनादियजनदत्तावधाना विषविषमाविषयाविषह्यरयग्रस्तविवेकग्राम्यजनानुग्राहका निखिलनिगमार्थपारदृश्वानो वशीकृतकरणान्तःकरणमातरिश्वानो भूरि यज्वानस्तपस्विनोऽवतेरुर्येषामतिविचित्रतमं चरितम् ॥

भवे रता अप्यभवाश्च केचिद्रमापसक्ता अपि नो रमापाः ॥
हिरण्यगर्भोपसृतास्तथापि हिरण्यगर्भास्तु न ते द्विजाग्र्याः ॥ ९ ॥

---

१ आम्रातको मधूकवृक्षः । २ जगत् । ३ शकुनिः पक्षिः दुर्योधनमातुलश्च । ४ अर्जुना वृक्षाः अर्जुनो भीमानुजः । ५ महपाणि सुदर्शनानि भीष्माणि भयङ्कराणि शतानि अनन्तानि द्रुपदानि वृक्षस्थानानि यस्मिन्, पक्षे- कुरुः कुरुकार्यैः भीष्मः प्रसिद्धः द्रुपदः द्रुपददेशराजा प्रसिद्धः । ६ शिखण्डी मयूरः भीष्मशत्रुश्च । ७ करणानि इन्द्रियाणि । ८ भवः शङ्करः संसारश्च । ९ रमापः श्रीपतिर्विष्णुः द्रव्यवांश्च । १० जगदुत्पत्तिकरो विष्णुः । ११ हिरण्यगर्भः श्रीमान् ।

